# १३. पृच्छकः ब्राह्मणः

कस्मिंश्चित् अरण्ये चण्डकर्मा नाम राक्षसः वसति स्म। कदाचित् कश्चित् ब्राह्मणः तत् अरण्यम् आगतवान्। राक्षसः तं दृष्टवान्। शीघ्रं तस्य स्कन्धम् आरुह्य उपविश्य सः उक्तवान् - 'भोः ब्राह्मण! अग्रे गच्छतु' इति। भीतः ब्राह्मणः अग्रे गतवान्।

गमनसमये ब्राह्मणः दृष्टवान् यत् राक्षसस्य पादद्वयम् कमलम् इव कोमलम् अस्ति इति। तत् दृष्ट्वा विस्मितः सः राक्षसं पृष्टवान् - ''भोः! भवतः पादद्वयं कथम् एवं कोमलम् अस्ति ?'' इति।

राक्षसः उक्तवान् - ''मम एकं व्रतम् अस्ति। अहं कदापि आर्द्रपादः भूमिं न स्पृशामि। अतः एव पादद्वयं तथा अस्ति'' इति। अनन्तरं ब्राह्मणः राक्षसात् आत्मनः मोक्षोपायं चिन्तयन् आसीत्।

किञ्चित्कालानन्तरम् एकं सरोवरं दृष्टम्। तदा राक्षसः - ''भोः ब्राह्मण! अहं स्नानं देवतार्चनं च कृत्वा आगच्छामि। तावत् भवता अत्रैव स्थातव्यम्'' इति उक्त्वा ब्राह्मणस्य स्कन्धतः अवतीर्य सरोवरं गतवान्। तदा ब्राह्मणः - 'एषः राक्षसः स्नानं देवतार्चनं च कृत्वा मां निश्चयेन खादति। अतः इदानीम् एव मया इतः धावनीयम्। व्रतभङ्गभयात् राक्षसः माम् अनुसर्तुं न शक्नोति' इति





चिन्तयित्वा ततः वेगेन धावितवान्। राक्षसः धावन्तं तं दृष्ट्वा अपि व्रतभङ्गभयात् ग्रहीतुं न अनुधावितवान्। एवं ब्राह्मणस्य प्राणाः रक्षिताः।

पृच्छकेन सदा भाव्यम् पुरुषेण विजानता।
राक्षसेन्द्रगृहीतोऽपि प्राणान्मुक्तो द्विजः पुरा॥